एतमानन्दमयमात्मानमुपसंक्रामति (तै.२/८) इति । एवं सत्युपक्रमे फलप्राप्तेः फलत्वेनोक्तेरुपसंहारेपि तथैव भवितव्यत्वादानन्दमयाप्राप्तेरेवान्ते फलत्वेनोक्तेस्तदुत्तरमन्यस्यानुक्तेरानन्दमय एव परः ।

ननूपसंक्रमणं ह्यतिक्रमणमतो न तथेति चेत् । हन्तैवमतिक्रान्तशब्दार्था त्वन्मतिर्भाति । यतः संक्रमणशब्दः प्राप्त्यर्थकः सर्वत्र श्रूयते । अत एव रवेर्मकरादिराशिप्राप्तौ तत्तत्संकम्रणमित्युच्यते । न चेयं न परममुक्तिः । अस्माल्लोकात्प्रेत्येति पूर्वमुक्तेः । अत एव पुरुषोत्तमानन्दानुभवे सत्यनुभवैकगम्योयमानन्दो न मनोवाग्विषय इति ज्ञात्वा लोकवेदकालादिभ्योपि न बिभेतीति यतो वाच इति श्लोकेनोक्तवती । अन्यथा मनसोप्यगम्यत्वमुक्तवा विद्वानिति कथं वदेत् । एवं सति सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता (तै.२-१) इत्यस्यामृचि यत्फलमुक्तं तदेवान्ते विवृतमिति ज्ञायते। अन्यथा - अस्माल्लोकात्प्रेत्य । (तै.२/८) इत्युक्तत्वाद् देहाभावेन भयानुपस्थित्या तन्निषेधासंभवः । कामभोगासंभवश्च । अत एव सामानाधिकरण्यमनुक्त्वा आनन्दं ब्रह्मण इत्युक्तम् । एतेन लौकिकं पूर्वदेहं त्यक्तवा साक्षाभ्दगवभ्दजनोपयोगिनं भगवद्विभूत्यात्मकं संधातं प्राप्नोत्यादौ । तथाहि। देहेन्द्रियप्राणान्तःकरणजीवात्मको हि संधातः । तत्र स्थूलं शरीरमाद्यविभूतिरूपम् । द्वितीयं स्पष्टम् । तृतीयं सर्वेन्द्रियसंबन्धित्वेनेन्द्रियरूपत्वेन चान्तःकरणात्मकत्वेन चेन्द्रियान्तः करणरूपम् । तुरीयं जीवतत्त्वात्मकम् । यत्र गुहायां भगवद्धरणेन परव्योमाविर्भावस्ततः पूर्णानन्दात्मकं पुरुषोत्तमस्वरूपं फलरूपं प्राप्य उक्तर्गर्थरीत्या तेन सह सर्वकामाशनमेव मनोवाग्विषयानन्दवेदनं तद्वान् भवतीति वाक्यैकवाक्यतयावगम्यते ।

अथेदं विचार्यते । पुरश्चक्रे द्विपद इति श्रुतौ वस्तुतस्तु पुरुष एव परं तु पुरः संबन्धी सन् पक्षी भूत्वा पुर आविशदिति निरूपितम् । प्रकृते चान्नमयादयस्तथैवोक्ताः । एवं सत्येकस्यां पुरि बहूनां तेषां प्रवेशो न वक्तुमुचितः । प्रयोजनाभावादित एकैकस्यां पुरि तथा वाच्यः । तत्र कीदृश्यां तस्यां प्रवेश इति विचार्यमाणे प्राकृतत्वब्रह्मत्वयोरविशेषाद्विनिगमकाभावात्सर्वेषां सर्वत्र प्रवेशोप्रवेशो वा भवेदिति चेत् । अत्रेदं प्रतिभाति । अस्माल्लोकाप्रेत्येति वाक्य इदंशब्दप्रयोगात्प्राकृतगुणमयं प्रपञ्चमतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलयोपयोगिनं प्राप्नोतीत्यगम्यते । तत्प्राप्तयैव भगवभ्दावे सम्पन्ने पूर्वं भगवद्विरहभावेनातितीव्रत्वेन सर्वोपमर्दिना शरीरेन्द्रियप्राणान्तः करणानि नष्टान्येव स्युर्यदि तत्तद्रूपं ब्रह्म तेषु तेषु न प्रविष्टं स्यात् । जीवस्य च ब्रह्मण्येव लयेन लीलारसानुभवेन नाश एव सः । तथा च तत्तदूपं ब्रह्म तेषु तेषु स्थितमिति न तेषां नाशः । जीवे त्वानन्दमयः पुरुषोत्तमः प्रविशतीति रसात्मकत्वादानन्दात्मकमेव विरहभावरसाब्धिमनुभूय पश्चात्प्रादुर्भूतप्रभुस्वरूपं प्राप्य न बिभेति कुतश्चनेति वाक्येन लोकात्तदभावमुक्त्वा - एतँ ह वाव न तपति किमहं - एत्ँ ह वाव न तपति किमहं साधुनाकरवं किमहं पापमकरवम् (तै.२/९) इति वाक्यैर्वेदाद्भयाभाव उच्यते । शरीरप्राणमनोन्तः करणजीवात्मनां शरीरत्वं वाजसनेयिशाखायामन्तर्यामिब्रह्मणे पठयते । यस्य

सर्वाणि भूतानि शरीरं यस्य प्राण: शरीरं यस्य वाक् शरीरं (बृ.३/७) इत्यादेरन्ते - यस्मात्मा रेणुजत्वेन विभूतिरुपत्वाद् ब्रह्मशरीरत्वम् ।

तत्रान्नमयतत्प्रवेशेन तत्स्थिति: प्राणेष्वपि तथा । ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात्तथा । मनसि मनोमयप्रवेशात्तथात्वम् । जीवे त्वानन्दमय: प्रविशतीति तथात्वम् । अतो युक्तं पक्षित्वकथनम् ॥

आनन्दमयस्य स्वरूपं विशेषतो वक्तुमशक्यमिति य: पूर्वस्येति सर्वत्रोक्तम् । शरीरप्रवेशप्रयोजनकपक्षिरूपित्वं परूस्वपि साधारणमिति तेषु तथा वदन्त्यानन्दमयेपि तथैवोक्तवती श्रुतिरिति ज्ञेयम् । एवं सति स्पर्शमणिसंबन्धेन रजतादेर्हेमत्वमिवोक्तप्रकारकप्रवेशादाश्रयाणामपि तत्तदात्मकत्वमित्युच्यते। वस्तुतस्तु परोक्षवादोयमिति ज्ञायते। तथाहि ब्रह्मविदाप्नोति परमिति वाक्येन ब्रह्मविद: परप्राप्तिं सामान्यत उक्तवा तत्तात्पर्यं सत्यं ज्ञानमित्यृचोक्तम् । तत्र सर्वत्रात्मभाववान् भक्तो भगवता सह तत्तत्स्वरुपात्मकान् कामान् भुङ्क्त इत्युक्तव्याख्यानेन तदर्थोवधार्यत उक्तभक्तस्य सदैव। विरहभावे तु विशेषत: प्रियस्वरूपातिरिक्तास्फूर्त्यान्न-प्राणादिरूप: स एवेति ज्ञापनाय तत्तद्रूपत्वमुच्यते । यस्य चक्षु: शरीरं यस्य श्रोत्रं शरीरं यस्य मन: शरीरं यस्य त्वक् शरीरं शरीरम् (बृ.३/७) इति (अत्र पूर्वोक्तानिर्गुणदेहानां भगवच्चरण तदनुभवविषय: प्रकट आनन्दमय इति तत्स्वरूपमुच्यते। तत्र निरुपधिप्रीतिरेव मुख्या नान्यदिति ज्ञापनाय प्रियस्य प्रधानाकत्वमुच्यते । तेन परमप्रेमवत्त्वं सिध्यति । ततो भगवदाविर्भावे सत्यपि पूर्वभावस्यातितीव्रत्वेन ज्ञानादिसर्वतिरोधानेनाग्रिमरसानुभवो न भविष्यतीति स्वयमेव तदनुभवात्मको भवतीति ज्ञापनाय विज्ञानरूपत्वमुच्यते । तदा प्रियेक्षणादिभिरानन्दात्मक एव विविधरसभावसंदोह उत्पद्यते य: स दक्षिण: पक्ष उच्यते । तत: स्पर्शादिभि: पूर्वलक्षण: प्रकृष्टानन्दसन्दोहो य: स पक्ष उच्यते । तत: नानाविधपक्षसमूहात्मकत्वात्तयो: पक्षयोर्युक्तं तथात्वम् । स्थायिभावस्यैकरूपत्वादात्मत्वमुच्यते यतस्तत एव विभावादिभिर्विविधभावोत्पत्ति: । परप्राप्तिसाधनीभूतब्रह्मज्ञानदशायां तदानन्दोपि य: पूर्वमनुभूत: स गणितानन्द इत्येतदानन्दानुभवानन्तरं तुच्छत्वेन भातीष्टगतावसाधनत्वेन स्वरूपतोपि तस्माद्धीनत्वं चेति पृष्ठभागादपि दूरस्थितपुच्छरूपत्वं ब्रह्मण उच्यते । पुरुषोत्तमाधिष्ठानत्वात्प्रतिष्ठारूपत्वं च । एवं भक्तकामपूरणकर्तृत्वरुपत्वं च । एवं भक्तकामपूरणकर्तृत्वेसंभावना विपरीतभावना च संभवति । तदभावायासन्नेव स भवतीत्याद्युक्तम् । स्वानुभवाभावेपि गुरूपदेशेनापि तदस्तित्वमात्रमपि यो जानाति तं ब्रह्मविद: सन्तं सत्त्वधर्मविशिष्टं वर्तमानं च विदुरित्यग्रेवददस्ति ब्रह्मेति चेदित्यादिना ।

ब्रह्मासत्त्वज्ञानेसन् भवतीत्युसन्तमेनं विदुरिति तत्त्वेनान्यज्ञानं यदुक्तं तेनोक्तपुरुषोमानन्दानुभववन्तं ज्ञानक्रियाविशिष्टं जीवं वर्तमानं विदु: । अननुभवे केवलं गुरूपदेशादिना तादृग्ब्रह्मास्तित्वज्ञाने स्वरूपत: सन्तं तं विदुर्न तु ज्ञानादिमन्तम् । तदसत्त्वज्ञाने त्वलीकतल्यमिति श्रुतितात्पर्यमिति ज्ञायते ।

एवं विचारचातुर्यवद्भि: सद्भिर्व्रजाधिपे ।
आनन्दमयतान्दसंदोहायावधार्यते ॥ १४ ॥ १ । १ ॥ ११ ॥

नन्वानन्दमयस्य न ब्रह्मता वक्तुं शक्या । मयटो लोके विकाराधिकारविहितत्वादित्याङ्क्य स्वयमेव परिहरति ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १।१।१२॥

अनेनैव पूर्वसूत्रार्थ: सिद्धो भविष्यति । विकारवाची शब्दो मयट्प्रत्ययो यस्मिंतस्तद्विकारशब्दं तस्मात् तच्छब्दवाच्यं ब्रह्म न भवति ब्रह्मणोविकारित्वादिति चेत् नात्र विकारे मयट् किन्तु प्राचुर्यात् । प्राचुर्यमतति प्राप्नोतीति प्राचुर्यात् । तथा च पाणिनि: । तत्प्रकृतवचने तस्मिन्मयट् प्रत्ययो भवतीत्यर्थ: । प्राचुर्येण पूर्वापेक्षयाप्याधिक्येन - को ह्येवान्यात् क: प्राण्यात् (तै.२/७) इति वाक्ये प्रकर्षेण स्तुतम् । अतो मयट् पूर्वापेक्षया प्राचुर्यमयते । एकदेशनिर्देशेन तदर्थलक्षणया प्राचुर्य: । प्राचुर्येण प्रस्तुतार्थवाचकत्वादित्यर्थ इति वा। छन्दसि व्द्यज्व्यतिरिक्तस्थले मयटो विकारे विधानाभावाद् व्याकरणमप्यर्थनिर्णायकं विज्ञानमयानन्दमयशब्दौ पश्यन्नपि पाणिनि: मयड्वैतयोर्भाषायां (पा.सू.४/३/१४३) व्द्यचश्छन्दसि (४/३/१५०) इति कथमवोचत् । अत्र केचित्सर्वविप्लववादिनो विकारार्थत्वं वदन्ति । श्रुतिसूत्रादीनामर्थज्ञानात् ॥ तद्वेदाद्यर्थविभ्दिर्भगवतो नवमावतारकार्यं ज्ञात्वोपेक्ष्यम् । योर्थस्तमवोचाम ॥ १/१/१२॥

शब्दबलविचारेण मयटो विकारार्थत्वं निवारितम् । अर्थबलविचारेणापि निराकारोति ।

तद्धेतुव्यपदेशाच्च ॥१/१/१३॥

हेतुत्वेन व्यपदेशो हेतुव्यपदेश: । तस्य हेतुव्यपदेशस्तद्धेतुव्यपदेशस्तस्मात् । एष ह्येवानन्दयाति । आनन्दयतीत्यर्थ: । सर्वस्यापि विकारभूतस्यानन्दस्यायमेवानन्दमय: कारणं यथा विकृतस्य जगत: कारणं ब्रह्माविकृतं सच्चिद्रूपमेवमेवानन्दमयोपि कारणत्वादविकृतोन्यथा तद्वाक्यं व्यर्थमेव स्यात् । तस्मान्नानन्दमयो विकारार्थ: । चकार: समुच्चयं वदन् सूत्रद्वयेनैकोर्थो मध्ये प्रतिपादित इत्याह ॥१/१/१३॥

ननु किमिति निर्बन्धेन सूत्रत्रयेणैवं वर्ण्यते । अन्नमयादिवदुपासनापरत्वेनापि श्रुत्युपपत्ते: । पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्तत्वाच्च । तस्माद्ब्रह्मत्वेन साधितमपि आवश्यकोपपत्त्यभावान्न ब्रह्मपरत्वमिति प्राप्तेभिधीयते ।

मान्त्रवर्णिकमेव च गम्यते ॥ १/१/१४॥

सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चिता (तै.२/१) इति मन्त्र: । मन्त्रेणाभिधया वृत्त्या प्रतिपाद्यं मान्त्रवर्णिकं तदुपपादनग्रन्थे तदेव मुख्य तया ज्ञायते । तत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यम् । उपपादनीयं च संदिग्धम् । तत्र ब्रह्मणा

विपश्चितेति संदिग्धं सर्वज्ञं तस्य हि फलत्वं वाक्ये नोपपाद्यते । फलं तु सर्वै: स्तुत आनन्द: । अभ्यासात्स्तुतत्वमित्यवोचाम । शिर:पाण्यादिकं तु स्तुत्यर्थमेव । पुरुषविधत्वाय । लोके ह्यन्तर्भूतं बहिर्वेष्टितं च तदाकारं भवति ।

जीवोत्र मुख्य: । कर्तृत्वेन व्यपदेशात् । स च वस्तुतो हंसरूप: । पुरुषाधिकारकं हि शास्त्रम् । तेन पुरुषशरीरे तदाकार: सर्वं फलं प्राप्नोति । अत: पुरुषं हंसरूपेणानुवर्णयति । पञ्चास्वपि शारीर आत्मा जीव एक एव । तत्रान्नमये नि:संदिग्धत्वात्तस्यैष एवात्मेति नोच्यते । द्वितीयादौ प्रथमोक्तमेवातिदिश्यते तत्रान्नमये हस्तेन प्रदर्शयन्निव नि:संदिग्धं व्याख्यातम् । तदन्तरो हि प्राण आन्तरव्यवहारकारणम्। बलभोजनविसर्गादिषूपयोगात् । तस्य संचार आकाशे परिनिष्ठत: पृथिव्याम् । एवं लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयम् । तदनु वैदिकव्यवहार: स च मनोमय: पुरुष:। आदेश: कर्मचोदना। ब्राह्मणानि सशेषाणि अथर्वाङ्गिरसे ब्रह्मकर्मत्वात्प्रतिष्ठा । तदनु नानाविधयागादिसाधनवत: फलं विज्ञानमय: । तत्र श्रद्धा आप: । तृतीयाध्याये त्वयमर्थो विस्तरेण वक्ष्यते । यथोक्तकर्तृत्वात्क्रमुक्ति: ।

ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ । योगश्च मुख्यत्वादात्मा । अधोभागो महर्लोक: । तादृशस्य ततोर्वाक्यसंसृत्यभावात् । ततोपि ब्रह्मविद आनन्दमय: फलम् । तस्य स्वरुपस्यैकत्वाद् धर्मभेदेन शिर:पाण्यादि निरुप्यते । तस्य मुख्यतया प्रीतिविषयत्वं धर्मस्तच्छिर: । मोदप्रमोदावपरिनिष्ठतावानन्दातिशयौ। आनन्दस्तु स्वरुपं साधनरुपत्वाद् ब्रह्मपुच्छमिति । श्लोकौ तु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय । अपरौ तु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन। अवान्तरानन्दास्तु सर्वे तस्मान्न्यूनतया तदुत्कर्षत्वबोधनाय । तस्मात्सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते । अतो मुख्योपपत्तेर्विद्यमानत्वेनानन्दमय: परमात्मैव । चकारो मध्ये प्रयुक्तो विधिमुखविचारेणाधिकरणसंपूर्णत्वबोधक: ॥ १/१/१४॥

निषेधमुखेन च चतु:सूत्र्येदमेवाधिकरणं पुनर्विचार्यते सुदृढत्वाय ॥ इदमत्राकूतम् । जीव एवानन्दमयोभवतु। फलस्य पुरुषार्थत्वात् । स ब्रह्मविदानन्दमयो भवतीति स्वर्गादिसुखवदलौकिकमेव रुपमानन्दमयं जीवस्य फलभूतमिति प्राप्तेभिधीयते ।

## नेतरोनुपपत्ते: ॥१/१/१५॥

इतरो जीवो न । आनन्दमयो न भवति । कुत: । अनुपपत्ते: । जीवस्य फलरूपत्वमात्रेणानन्दमयत्वं नोपपद्यते । तथा सति तस्य स्वातन्त्र्येण जगत्कर्तृत्वरूलौकिकमाहात्म्यवत्त्वेन निरूपणं नोपपद्येत । अतो न जीव आनन्दमय: ॥ १/१/१५॥

## भेदव्यपदेशाच्च ॥१/१/१६॥

इतोपि न जीव आनन्दमय: । यतो भेदेन व्यपदिश्यते । रसँह्येवायं लब्ध्वानन्दी भवति (तै.२/७)

इति। आनन्दोस्यास्तीत्यानन्दी । एष ह्येवानन्दयाति । (तै.२/७) आनन्दयतीत्यर्थ: । चकारात् सूत्रद्वयेन जीवो नानन्दमय इति निरूपितम् ॥ १/१/१६॥

तर्हि जडो भवत्वानन्दमय: । न । आन्तरत्वान्न कार्यरूपो भवति । किन्तु कारणरूप: स स्वमतेनास्त्येव। मतान्तरे प्रकृतिर्भवेत् । तन्निवारयति ।

## कामाच्च नानुमानापेक्षा ॥१/१/ १७॥

जडा प्रकृतिर्नास्तीति कारणत्वेन निराकृतैव । अथैतद्वाक्यान्यथानुपपत्त्या सत्त्वपरिणामरूपा कल्प्येत । सा कल्पना नोपपद्यते । कुत: । कामात् । आनन्दमयनिरूपणानन्तरं - सोकामयत (तै.२/६) इति श्रूयते । स कामश्चेतधर्म: । अतश्चेतन एवानन्दनमय इति । चकारात् - स तपोतप्यत (तै.२/६) इत्यादि । अतोनुमानपर्यन्तर्मथबोधयद्वाक्यं न तिष्ठतीत्यर्थ: ॥१/१/१७॥

## अस्मिन्नस्य च तद्योगं शास्ति ॥१/१/१८॥

इतश्च न जड आनन्दमय: । अस्मिन्नानन्दमयेस्य जीवस्य च आनन्दमयमात्मानमुपसंक्रामति (तै.२/८) इति तेन रुपेण योगं शास्ति फलत्वेन कथयतीति । न हि जीवस्य जडापत्तिर्युक्ता । ब्रह्मैव सन् ब्रह्माप्येति (बृ.३/४/६) इतिवदस्याप्यर्थ: । तस्मान्नायं जीवो नापि जड: । पारिशेष्याद्ब्रह्मैवेति सिद्धम् ।

ये पुनरधिकरणभङ्गं कुर्वन्ति तेषामज्ञानमेव । यतस्तैरप्यानन्दमय: क: पदार्थ इति वक्तव्यम् । न तावज्जीव: । तस्य ब्रह्मज्ञानफलत्वेन ब्रह्मणा विपश्चितेत्यान्दमयस्योक्तत्वात् । अथ जड: स्वर्गवत् । तदा किमाश्रित इति वक्तव्यम् । जडाश्रितत्वे कर्मफलमेव स्यात् । ज्ञानस्याप्यवान्तरफलमिति चेत् । न । तर्हि किमानन्दात्तस्यातिरिक्तं फलं भविष्यति । जडचिद्रूपताया: पूर्वमेव विद्यमानत्वात् । अस्यैवान्दस्यान्यानि भूतानि मात्रामुपजीवन्ति (बृ.४/३/३२) इति श्रुतिविरोधश्च पुच्छत्वेन ब्रह्मवचनात्प्रद्वेष इति चेत् । तर्हि स एको ब्रह्मण आनन्द: (तै.२/८) इत्यत्रापि षष्ठ्या भेदनिर्देशाद्ब्रह्मण: परमपुरुषार्थत्वं नाङ्गीकुर्यात् । उपक्रमादिसर्वविरोधश्च पूर्वमेव प्रतिपादित: । यदप्यधिकरणमन्य रचितं ब्रह्मपुच्छमिति तत्र न पुच्छस्य ब्रह्मत्वं प्रतिपाद्यते । येनान्यथा समाधानं भवेत् । किंतु ब्रह्मण: पुच्छत्वमिति पूर्वन्यायेनेदं पुच्छं प्रतिष्ठेतिवत् । तत्र श्रुतिबाधो ब्रह्मणाप्यशक्य: । मौर्ख्यं चैतत् । आनन्मयस्यैव ब्रह्मत्वे न कोपि दोष: स्यात् । आनन्दमयस्याब्रह्मत्वं परिकल्प्य तत्पुच्छत्वेन ब्रह्म वेदबोधितमिति ज्ञात्वा तत्संमाधानार्थं यतमानो महामूढ इति विषयफलयो: किं मुख्यमित्यप्यनुसन्धेयम् । पुच्छत्वोक्तिस्तु पूर्वभावित्वाय । अत एव ज्ञानविषयत्वं प्रतिष्ठा च । आनन्दमयो ब्रह्मण्येव प्रतिष्ठित इति । अत्रावयवावयविभावो भाक्त इति तु युक्तं प्राणमयादीनामपि तथात्वात् । अन्तस्थितस्य बाह्यानुरोधेन तथा त्वमिति सर्वं सुस्थम् ॥१८॥५॥

## ६ अन्तस्तद्धर्माधिकरणम् ।

अथ य एषोन्तरादित्ये हिरण्मय: पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्य: पाप्मभ्य उदित: । उदेति ह वै सर्वेभ्य: पाप्मभ्यो य एवं वेद (छां.१/६/७) अथ य एषोन्तरक्षिणि पुरुषो दृश्यते (छां. १/७/५) इत्यादि ।

तत्र संशय । किमधिष्ठातृदेवताशरीरमाहोस्वित्परब्रह्मेति ब्रह्मणो वा शरीरमिति । तदर्थमिदं विचार्यते । हिरण्मयशब्द: सुवर्णविकारवाची । आहोस्वित् प्रकाशसाम्येनान्दवाचीति । ब्रह्मविदाप्नोति परम् (तै.२/१) इत्युपक्रम्य आनन्दमयस्य फलत्वमुकत्वा द्वितीयोपाख्याने - स यश्चायं पुरुषे यश्चासावादित्ये स एक: स य एवंविद् (तै.३/१०) इति फलं श्रुतम् । तत्र सवितरि विद्यमानस्याब्रह्मत्वे फलं नोपपद्यत इति विचारारम्भ: । तत्र हिरण्मयदशब्दो विकारवाची केशनखादयश्चयोच्यन्ते शरीरधर्मा: । मृता वा एषा त्वगेमेध्या यत्केशश्मश्रु (कठ श्रु. ३) इति शरीरमन्तरा नोपपद्यते । परिच्छेदश्चाधिदैविकादिवचनं च बाधकम् । अत: सर्वथा तच्छरीरमिति तु मन्तव्यं चाक्षुषत्वाच्च । इन्द्रियवत्वं च श्रूयते । यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्य (छां १/६/७) इति । कपेरास आसनम् । आरक्तं तस्यासनं भवतीति । असभ्यतुल्यता च । अतो देहेन्द्रियोर्विद्यमानत्वाज्जीव: कश्चिदधिकारी सूर्यमण्डलस्थ इति गम्यते । फलं तत्सायुज्यद्वोरेति । अथोच्यते - एष सर्वेभ्य: पाप्भय उदित: (छां. १/६/७) इत्यपहतपाप्मत्वादिधर्मश्रवणात् पूर्वदोषस्यापि विद्यमानत्वाद्ब्रह्मण एव केनचिन्निमित्तेन शरीरपरिग्रह इति । तस्य च शरीरस्य कर्मजन्यत्वाभावादपहतपाप्मत्वादि संगच्छते सुवर्णशरीरत्वमप्यलौकिकत्वाद् ब्रह्मण एव संगच्छते ।

शरीरवदिन्द्रियस्यापि परिग्रह: । वर्णमात्रपरिग्रहान्नासभ्यता । स्थावरापेक्षा जङ्गस्योत्कृष्टत्वात्सथावरावयवोपमवज्जङ्गमावयवोपमानं स्थावरस्यापीति सर्वब्रह्मभावाय श्रुत्युक्तत्वाच्च। तस्माद् ब्रह्मण एवेदं शरीरमित्येवं प्राप्त उच्यते ।

### अन्तस्तद्धर्मोपदेशात् ॥ १/१/१९ ॥

अन्तर्दृश्यमान: परमात्मैव । कुत: । तद्धर्मोपदेशात् । तस्य ब्रह्मणो धर्मा उदित्यादिधर्मा उपदिश्यन्ते । स एष सर्वेभ्य: पाप्मभ्य उदित: (छां. १/६/७) इति ।

अयमाशय: ब्रह्म कारणं जगत्कार्यमिति स्थितम् । तत्र कार्यधर्मा यथा कारणे न गच्छन्ति तथा कारणासाधारणधर्मा अपिकार्ये । तत्रापहतपाप्मत्वादय: कारणधर्मास्ते यत्र भवन्ति तद्ब्रह्मेत्येवावगन्तव्यम् ।

बलिष्ठत्वात्कारणधर्मस्य । नामतुल्यतामात्रमुभयेषामपि धर्माणां ते श्रुत्यैकसमधिगम्या: । ब्रह्मणि लोके प्रमाणान्तरमपि प्रवर्तते । अत: सर्वरसादयो ब्रह्मनिष्ठा एव धर्मा: ।

स्थूलत्वादयस्तु ये ब्रह्मणि निषिन्ध्यन्ते स्थूलादिवाक्येषु ते कार्यधर्मा: । अणोरणीयानित्यादिषु कारणधर्मा एव । अत एकोप्यसाधारणो धर्मो विद्यमान: शिष्टान् संदिग्धानपि ब्रह्मधर्मानेव गमयति । इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह सूत्रकार: । तथा च श्रुतिव्यतिरिक्तस्थले

तथैवावगन्तव्यम् । अनन्तमित्यन्तमूर्तिता च ब्रह्मण: प्रतिज्ञाता । अन्यथा गुहायां निहितमिति विरुध्यते। तस्मात्साकारं तादृशमेव ब्रह्म । ब्रह्मण: शरीरमिति तु सर्वथासंभवम् । सर्वकर्तुर्ब्रह्मण: का वानुपपत्ति: स्यात् । येन तस्यापि शरीरं कल्पयेत् । किंतु लीलया व्यामोहनार्थमन्यथा भासयेन्नटवत् । तस्माद्वेदातिरिक्तेप्युपित्तपूर्वकं यत्र ब्रह्मधर्मस्तब्द्रह्मेति मन्तव्यम् । ब्रह्म तु वेदैककसमधिगम्यं यादृशं

वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम । प्रकृतेपि हिरण्मय इत्यत्र यकारलोपश्छान्दस: । अतो न व्द्य। हिरण्यशब्द आनन्दवाची । लोकेपि तस्यानन्दसाधकत्वात् । अत: केशादयोपि सर्व आनन्दमया एव तादृशमेव ब्रह्मस्वरूपमिति मन्तव्यम् । अत एव ।

ध्येय: सदा सवितृमण्डलमध्यवर्ती नारायण: सरसिजासनसंनिविष्ट: ।
केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्र: ॥१॥

(आ.हृदय.५५) इत्यत्रापि वपु: स्वरूपम् । माया ह्येषा मया सृष्टा (म.भा.१२/३३९/४५) इत्यादि भगवद्वाक्यं भगवन्मायया भगवन्तमन्यथा पश्यतीत्याह । नतु भगवानेव मायिक इति । शरीरे सति जीवत्वमेवेति निश्चय: । अतो ब्रह्मधर्मोपदेशात्सूर्यमण्डलस्थ: परमात्मैव ॥१/१/१९॥

## भेदव्यपदेशाच्चान्य: ॥१/१/२०॥

इतोपि सूर्यमण्डलस्थ: परमात्मा । भेदव्यपदेशात् । य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्य: शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत: (बृ.३/७/९) इति श्रुत्यन्तर आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टम् । यद्यपि तत्राकारो न श्रूयते तथापि हिरण्मयवाक्येनैकवाक्यत्वात् सर्वत्र साकारमेव ब्रह्मेति मन्तव्यम् ।

अन्तर्यामिब्राह्मणे चत्वारोर्था उच्यन्ते । सर्वत्र तिष्ठन् तद्धर्मैर्न संबध्यते । सर्वमुक्तिपरिहाराय स्वधर्मैस्तन्न बध्यते । स्वलीलासिध्यर्थं तच्छरीरमिति । तस्य नियमनं तदर्थमिति । चकाराद्धर्मा उच्यन्ते । तस्मात्सर्वविलक्षणत्वादन्य एव नाभिमानी । उपचारव्यावृत्त्यर्थमन्यपदेनोपसंहार: । ब्रह्मत्वे सिद्धे ज्ञानं वोपासना वेति नास्मत्सिद्धान्ते कश्चन विशेष: । कारणे कार्यधर्मारोपस्त्वयुक्त एव । कार्ये पुन: कारणधर्माधिकरणत्वेनोपासना अभेदात् फलायेति सर्वत्र व्यवस्थिति: ॥ १/१/२०/६॥

## ७ तल्लिङ्गाधिकरणम् ।

### आकाशस्तल्लिङ्गात् ॥ १/१/२१ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायानाकाश: परायणम् । (छां. १/९/१) इति । तत्र संशय: । भूताकाशो ब्रह्म वेति । ननु कथम संदेह: । आकाशव्योमशब्दा ब्रह्मण्येव प्रमुज्यन्ते ब्रह्मप्रकरणे। कार्यनिरुपणे तु महाभूतववन: । आनन्दो न स्यात्

परमे व्योमन् प्रतिष्ठिता - इत्यादि । आत्मन आकाश: संभूत: (तै.२/१) इति कार्यनिरूपणम् । अत: प्रकरणादेव संदिग्धनिर्णये किमिति सूत्रारम्भ: जन्मादिलक्षणसूत्रेण चायमर्थो निर्णीत: । अन्यथा ब्रह्मशब्देपि संदेह: स्यात् महाभूतवेदादिवाचकत्वात् । तस्मात्प्रकरणादेव परिज्ञानं भविष्यतीति चेत् । उच्यते । असंदिग्धे प्रकरणे तथैव निर्णय: । इह पुन: प्रकरणमपि संदिग्धमतो विचार: ।

अवान्तरविद्यायां पर्यवसितप्रकरणवदस्यापि प्रकरणस्य भूताकाश एव पर्यवसानमिति लोकभाष्यन्यायेनाकाशो भौतिक एवेति पूर्वपक्षस्तत्राह । आकाशस्तल्लिङ्गात् । आकाश: परमात्मैव । कुत: । तल्लिङ्गात् । श्रुतिलिङ्गादयो नियामकत्वेन पूर्वतन्त्रवदिहापि गृह्यन्ते । लिङ्गश्रुतिसामर्थ्यमेकवाक्यता च सर्वासां ब्रह्मश्रुतीनां तत्र ब्रह्मैव जगत्कारणमिति नि:संदिग्धेषु सिद्धम्। सर्वशब्दवाच्यत्वं ब्रह्मण्येव । तत्र वाक्यार्थापेक्षया पदार्थस्य दुर्बलत्वाद्वाक्यार्थ: सर्वगतित्वादि: । तद्वाक्यार्थान्यानुपपत्त्याकाशपदार्थो ब्रह्मेति । सर्वशब्दावाच्यत्वाच्च न लक्षणा मुख्यत्वाच्च । यावन्मुख्यपरत्वं संभवति तावन्न कस्यापि वेदान्तस्यापरब्रह्मपरत्वमिति मर्यादा । तस्माद् - यदेष आकाश आनन्दो न स्यात् (तै.२/७) इतिवदत्राप्याकाशो ब्रह्मैवेति सिद्धम् ॥ १/१/२१ ॥७॥

## ८ अतिदेशाधिकरणम् ।

### अत एव प्राण: ॥१/१/२२ ॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता (छां.१/११/४) इत्युपक्रम्य श्रुयते - कतमा सा देवतेति प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता (छां. १/११/५) इति । तत्र संशय: । आसन्य: प्राणो ब्रह्म वेति । पूर्वपक्षसिद्धान्तौ पूर्ववदेवेत्यतिदिशति । नन्वधिकरणानां न्यायरूपत्वात्सर्वत्र गमिष्यति किमित्यतिदिश्यत इति । उच्यते । प्राणस्य मुख्यस्यापि सर्वभूतसंवेशनं स्वापादौ श्रुतोवेवोपपाद्यते । यदा वै पुरुष: स्वपिति प्राणं तर्हि वागप्येति

(श.ब्रा.१०/३/३/६) इत्यादिना । तत्र यथा प्राणविद्याया न ब्रह्मपरत्वमेवमेवास्यापि न ब्रह्मपरत्वमिति न न्यायेन प्राप्नोति । अतोतिदिशति । अनेन चायमतिरिक्तो न्याय आपादित: । यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किंचिद्बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयमिति । न त्वन्यस्मिन्संभवे तत्परत्वमिति । अत एव तल्लिङ्गात्प्राणशब्दवाच्यं ब्रह्मेति ॥१/१/२२/८ ॥

## ९ ज्योतिश्चरणाधिकरणम् ।

ज्योतिश्चरणाभिधानात् ॥१/१/२३॥

इदमामनन्ति । अथ यदत: परो दिवो ज्योतिर्दीप्यते विश्वत पृष्ठेषु सर्वत: पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु । इदं तावद्यदिदमस्मिन्नन्त: पुरुषे ज्योति: (छां.३/१ ३/७) इति । तत्र ज्योति: शब्देन प्राकृतं ज्योतिराहोस्विद् बह्मैवेति संशय: । अत्रासाधरणब्रह्मधर्माभावात् पूर्वपक्ष: । सिद्धान्ते तु चरणस्य ब्रह्मधर्मत्वमिति । तावानस्य महिमातो ज्यायांश्च पुरुष: । पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि । (छां.३/१२/९) इति गायत्र्याख्यब्रह्मविद्यां वक्तुं तस्या: पादचतुष्टयं प्रतिपाद्य ब्रह्मणश्चतुष्पात्त्वमुक्तम् । पुरुषसुक्तेप्याश्रमचतुष्टयस्था जीवा: पादत्वेनोक्ता: । तथा प्रणवब्रह्मविद्यायामप्यकारोकारमकानादवाच्याश्चत्वार: पादा विश्वतैजसप्राज्ञतुरीया उक्ता: । तद्विष्णो: परमं पदमिति च । ब्रह्म पुच्छमिति च । सत्यकामब्राह्मणे तु स्पष्या एव ब्रह्मणश्चत्वार: पादा निरुपिता:। अत: सच्चिदान्दरुपस्य प्रत्येकसमुदायाभ्यां चतुरुपत्वम् । तत्र केवलानां कार्यत्वमेव । चतुर्थपादस्य तु ब्रह्मत्वम् । तत्रापि षड्विधत्वप्रतिज्ञानाद् भूतपृथिवीशरीराणां परिचायकत्वेन षड्विधत्वमनिरुप्य हृदयस्य षड्विधत्वं निरुपयन् - तस्य ह वा एतस्य (छां.३/१३/१) इत्यादिना पञ्चदेवपुरुषान्निरुप्य तेषां द्वारपालत्वज्ञानान्तरं - अथ यदत: परो दिवो ज्योतिर्दीप्यते पञ्च पुरुषास्तत: परो दिवो ज्योति: षष्ठस्तस्यैव सर्वत्र दीप्यमानत्वं निरुप्य तदेवान्त: पुरुष उपसंहरति । तस्मात्पूर्वं त्रिपादस्यामृतं दिवि (छां.३/१२/६) इत्युक्तवादस्य त्रिपात्संबन्ध्यमृतमुपरितनलोकेष्विति । अतोत्र चतुर्थ: पादो निरुप्यत इति सिद्धम् । अत: पादानां ब्रह्मधर्मत्वात् ज्योतिषो ब्रह्मत्वमिति । ब्रह्मधर्मनिर्णयार्थमिदमधिकरणं चरणानामौपचारिकत्वव्यावृत्त्यर्थम् । एतन्निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्या: ॥१/१/२३॥

छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥१/१/२४॥

ननु नात्र ब्रह्म चतुष्पन्निरुपितं किंतु गायत्रीछन्द: । गायत्री व इदं सर्वं यदिदं किंच (छां. ३/१२/१)

इत्युपक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्युक्तम् (छां. ३/१२/५) तावानस्य महिमा (छां. ३/१२/६ ) इति । तस्यामेव व्याख्यानरुपायां

गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद्ब्रह्म चतुष्पादभिदध्यात् । यद्वैतद्ब्रह्मेति ब्रह्मपदमपि छन्दसः प्रकृतत्वात्तत्परमेवावगन्तव्यम् । इति चतुर्थपादस्य षष्ठविधत्वप्रतिपादनादतश्चतुर्थपादे शब्दस्यापि ब्रह्मवाचकत्वसिद्धेः। ब्रह्मोपनिषदितिवच्छब्दब्रह्मेति च।

तस्माच्छन्दस एव पादाभिधानान्न ब्रह्मधर्माः पादा इति चेत् । नैषदोषः। तथा चेतोर्पणनिगदात् । तथा तेन द्वारेण चेतसोर्पणं निगद्यते । गायत्री वा इदं सर्वं यदिदं किंच (छां. ३/१२/१) इति । नहि वर्णसमाम्नायस्य सर्वत्वमनुपचारेण संभवति । यथा सूचीद्वारा सूत्रप्रवेशस्तथा

गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति । कुत एतदेवं प्रतिपाद्यत इति तत्राह । तथश हि दर्शनं तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति स्थूला बुद्धिर्नाहत्यैव ब्रह्मणि प्रविशेदिति । एतेन सर्वा मन्त्रोपासना व्याख्याताः । हि युक्तश्चायमर्थो लोके स्वतो यत्र प्रविशति तदुपायेन प्रविशतीति । न त्वदृष्टद्वारा । दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् । तस्मात्पादा ब्रह्मधर्माः ॥१/१/२४॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १/१/२५॥

किंच। भूतादयोत्र पादा व्यपदिश्यन्ते। भूतपृथिवीशरीरहृदयानि चत्वारि। न ह्येतानि गायत्र्याः पादा भतिुमर्हन्ति । ब्रह्मपरिग्रहे तूपपद्यन्ते । यावन्मुख्यमुपपद्यते तावन्न गौणं कल्पनीयम् । अयमर्थः । पूर्वहेतौ छन्दसोपि पादा व्यपदेशाभ्दवन्ति तथापि ब्रह्मण एव युक्ता इति । पुरुषसूक्ते - एतावानस्य

(ऋ.सं.१०/९०/३) इत्यस्य ब्रह्मपरत्वात् । अस्मिन्वाक्ये तु गायत्र्याः पादा एव नोपदिष्टाः किन्तु ते ब्रह्मण एव पादा इति । तद्वाचकत्वेन गायत्र्यापचारेणोपसंहारः । चकारादर्थो न शब्दस्य पादा भवन्ति किन्त्वर्थस्यैवेति । तस्माद्ब्रह्मवाक्यत्वे भूतादीनां पादत्वमुपपद्यते नान्यथेति । तस्मात्पादानां ब्रह्मधर्मत्वम् ॥१/१/२५॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥१/१/२६॥

पादोस्य विश्वा भूतानि (छां.३/६) सर्वाणि भूताप्येकः पादः । पादत्रयममृतं दिवीत्येकोर्थः ॥

पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोधायि मूर्धसु ॥१५॥

इत्यपरः । पुरुषसूक्तानुरोधे द्वितीय एवार्थः । प्रथमे तावत् - ननुदिवीति मन्त्रे सप्तम्या आधारत्वं

प्रतिपाद्यते । अतः परमित्यत्र पञ्चम्या अनाधारत्वमत उपदेशभेदात् पूर्वोक्तपरामभावान्न ज्योतिषो

ब्रह्मत्वमिति चेत् । नैष दोषः । उभयस्मिन्नप्यविरोधात् । मन्त्रे दिव्येवोक्तमस्मिन् वाक्ये सर्वत्रोच्यते । सर्वत्र विद्यमानस्य दिवि विद्यमानत्वं न विरुध्यते । अतः शब्देन न तत्राविद्यमानत्वम् । किन्तु

ततोप्यन्यत्र सत्त्वं बोध्यते तस्मात् सप्तमीपमीनिर्देशो न विरुद्धः । द्वितीये तु - ननु मन्त्रेमृतपदमत्र ज्योतिः पदमत उपदेशभेदाच्चतुर्थश्च पादो हृदयम् । अतः शब्दाच्च सर्वस्माद्भेदः प्रतिपाद्यते । अत उपदेशभेदान्नैकवाक्यता । अस्मिंश्च वाक्ये चरणाभावात्स्वरूपासिद्धो हेतुरिति चेत् । नैष दोषः । उभयस्मिन् ज्योतिःपदेमृतपदे च प्रयुज्यमान एकार्थत्वान्न विरोधः । पादत्रयमुपरितनलोकेषु चतुर्थं

सर्वत्रेति । अन्यथा वैजात्यं पादानामापद्यते । परिच्छेदश्च विरोधश्च। अतोमृतज्योतिः शब्दयोरेकार्थत्वेन विरोधाभावात् एकवाक्यत्वम् । अतोत्र चरणसद्भावात्तस्य च ब्रह्मधर्मत्वाज्ज्योतिर्ब्रह्मैव ॥ १/१/२६/९॥

## १० अनुगमाधिकरणम् ।

## प्राणस्तथानुगमात् ॥१/१/२७॥

अस्ति कौषीतकिब्राह्मणोपनिषदीन्द्रप्रतर्दनसंवादः । प्रतर्दनो ह वै दैवोदासिः (कौ.ब्रा.३/१) इत्यादिना। एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यात् (कौ.ब्रा.३/८) इत्येतदन्तम् । तत्र वरदाने मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्य इत्युपक्रम्य त्वाष्ट्रवधशदिनात्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य कस्त्वमिति

विवक्षायां - प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्व (कौ.ब्रा.३/२) इत्युक्त्वा प्राणत्वमुपपाद्यामृतत्वं च प्राणस्योपपाद्य प्राणेन ह्येवामुष्मिंल्लोकेमृतत्वमाप्नोति (कौ.ब्रा.३/२) इत्यमृतत्वं योगेन प्रतिपादयति । तत्र संदेहः । प्राणः किमासन्यो ब्रह्म वेति ।

अत एव प्राण इत्यत्र प्राणशब्दमात्रे संदेहः । अत्रार्थेपि संदेहः बाधकं च वर्तत इति पृथगधिकरणारम्भः । तत्र साधकासाधारणधर्मस्याभावाद् बाधकानां विद्यमानत्वान्न ब्रह्मत्वमिति

पूर्वपक्षः । सिद्धान्तस्तु चतुर्भिः सूत्रैः प्रतिपाद्यते । तत्र प्रथमं साधकधर्ममाह एकेन । त्रिभिर्बाधकनिराकरणम् । प्राणः परमात्मा भवितुमर्हति । कुतः । तथानुगमात् । तथाहि । पौर्वापर्येण

पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते । उपक्रमे तावद्वरं वृणीष्वेतीन्द्रः

प्रतर्दनोक्त: परमपुरुषार्थं वरमुपचिक्षेप । त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे (कौ. ब्रा. ३/१) इति । तस्मै हिततमत्वेनोपदिश्यमान: प्राण: कथं परमात्मा न स्यात् । न हि

परमात्मनोन्यद्धिततममस्ति । परमानन्दस्वरूपत्वात् । पापाभावश्च ब्रह्मविज्ञान एव । क्षीयन्ते चास्य

कर्माणि तस्मिन् दृष्टे परावरे (मुं. २/२/८) इति श्रुते: । प्रज्ञात्मत्वं च तस्यैव संभवति । उपसंहारेप्यानन्दोजरोमृत: (कौ.ब्रा.३/९) इति । एष लोकाधिपति: (कौ.ब्रा.३/९) इत्यादि च । तस्मात्सर्वत्रानुगमात्प्राणो ब्रह्म ॥१/१/२७॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥१/१/२८॥

बाधकमाह । यदुच्यते प्राणो ब्रह्मेति तन्न । कुत: । वक्तुरात्मोपदेशात् । वक्ता हीन्द्र आत्मानमुपदिशति। मामेव विजानीहीत्युपक्रम्य प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरस्मृतमित्युपास्व (कौ.ब्रा.३/२) इतिस एष प्राणो वक्तुरात्मत्वेनोपदिश्यमान: कथं ब्रह्म स्यात् । तथा च वाचो धेनुत्वोपासनवत् देवताया: प्राणत्वेनोपासना बोध्यते । अन्ये च ब्रह्मधर्मा: प्राणस्तावका इति ।

कथमस्य ब्रह्मोपाख्यानत्वमिति चेत् न । अध्यात्मसंबन्धभूमा ह्यस्मिन् । अस्मिन्प्रकरणेध्यात्मसंबन्ध: । आत्मानमधिकृत्य य: संबन्ध: । आत्मशब्दो ब्रह्मवाची वस्तुतो जीवस्य ब्रह्मत्वाय तथा वच: । तस्य संबन्धस्तद्धर्मास्तेषां बाहुल्यं प्रतीयत एष लोकपाल इत्यादि । यावद्यथाकथंचिदपि ब्रह्मप्रकरणत्वं सिध्यति तावदन्यप्रकरणत्वमयुक्तमिति हि शब्दार्थ: । प्राणस्य प्रज्ञात्मत्वं स्वातन्त्र्येणायुर्दातृत्वम् । न वाचं विजिज्ञासीत, वत्कारं विद्यात् (कौ.ब्रा.३/८) इति चोपक्रम्य - तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्रा: प्रज्ञामात्रास्वर्पिता: प्रज्ञामात्रा: प्राणेर्पिता: । स एष प्रज्ञात्मानन्दोजरोमृतो न साधुना कर्मणा (कौ.ब्रा.३/९)

इत्यादिविषयेन्द्रियव्यवहारेरनाभिभूतं प्रत्यगात्मानमेवोपसंहरति । स म आत्मेति विद्यात् (कौ.ब्रा.३/९) इति चोपसंहार: । तस्मादध्यात्मसंबन्धबाहुल्यात् ब्रह्मोपदेश एवायम् ॥१/१/२८॥

तर्हि बाधकस्य का गतिरित्यत्राह ।

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥१/१/२९॥

पूर्वसूत्रेणापरिहृतमत्र परिहरति तुशब्द: । अयं दोषो व्यवहारदृष्ट्योपदेशे । अहं ब्रह्मेत्यार्षेण दर्शनेन तूपदेश: । ननु तत्त्वमसि (छां. ६/९/४) अयमात्मा ब्रह्म (बृ.२/५/१९) इति वाक्येषु जीवस्य ब्रह्मत्वं

बोध्यते । तत्र प्रत्यधिकारं शास्त्रप्रवृत्तिरिति न्यायेन स्वात्मन एव ब्रह्मत्वावगतिर्मुख्या न प्रतर्दनस्येन्द्रजीवब्रह्मत्वावगतिरुपासनं वा पुरुषार्थाय । अतः शास्त्रदृष्टिरपि नैवंविधा । केवलस्य चैतन्यमात्रस्य तादृशे ब्रह्मण्यैक्यावगतिविरोधात् तत्त्वमस्यादिवाक्यार्थोऽध्यवसीयते । ननु ब्रह्मधर्मा जीवे वक्तुं शक्यन्त इत्याशङ्क्य परिहरति । वामदेववत् । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च (बृ.१/४/१०) इति । य एव प्रत्यबुध्य स सर्वं भवति । तत्र सर्वेषां सर्वभावे सर्वानन्त्यप्रसंगात्सर्वमेकमेवेति वक्तव्यम् । ततः कारणलय एव सर्वभाव इतिमनुरभवं सूर्यश्च इत्यवयुत्यानुवादोनुपपन्नः । तत्र यथा ज्ञानावेशात्सर्वधर्मस्फूर्तिः एवमत्रापि ब्रह्मावेशादुपेदश इति त्वाष्ट्रवधादयो ब्रह्मधर्मा एव तदावेशेन क्रियमाणत्वात् । नन्वेष वज्रस्तव शक तेजसा हरेर्दधीचेस्तपसा च तेजितः । तेनैव शत्रुं जहि विष्णुयन्त्रितः (भा.६/११/२०) इति वृत्रवचनं भागवते । तस्माद्युक्तं ब्रह्मधर्मवचनम् । ननु-स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि (ब्र.सू.४ -४-१६) इति सूत्रे सुषुप्तौ ब्रह्मसंपत्तौ च ब्रह्मधर्माविर्भावो न त्वन्यदेति कथमेवमिति चेत् । मैवम् । उपदेशभावनादिष्वपि

कदाचिदुत्तमाधिकारिविषये ब्रह्मप्राकटयमित्यङ्गीकर्तव्यम् । मय्येव सफलं जातम् - इत्यादिवाक्यानुरोधात् । इहैव समवनीयन्ते प्राणाः । ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ३/४/६) इत्यप्याविर्भावापेक्षं तस्य च प्राप्तवान्न सूत्रे फलत्वमाह । जीवन्मुक्तानामपि परममुक्तेर्वक्तव्यत्वाच्च । असंप्रज्ञातसमाधाविवाविर्भावदशायामेव शरीरवियोगे वियोजकाभावाद् वागादिमात्रं लीयते । तस्य च प्राप्तत्वादेव नार्चिरादिगतिः । तथापि प्रायिकत्वादेव न सूत्रगीतादिषु तद्वचनम् । सगुणनिर्गुणभेदेन नियमवचनं त्वप्रामाणिकमेव । ब्रह्मवादे गुणानङ्गीकाराच्च । तस्माद्युक्तमुक्तं शास्त्रदृष्टया तूपदेश इति ॥१/१/२९॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥१/१/३०॥

अन्यद्बाधकद्वयमाशङ्कते । ननु यद्यपि ब्रह्मधर्मा भूयांसः प्रकरणे श्रूयन्ते । तद्वज्जीवधर्मा मुख्यप्राणधर्माश्च बाधकाः सन्ति । न वाचं विचिज्ञासीत । वक्तारं विद्याद् (कौ.ब्रा.३/८) इत्यादि । अत्र हि वागादिकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । अथ खलु प्राण एव प्रमात्मेदं शरीरं परिगृह्य ( कौ.ब्रा.३/३) इति शरीरधारणं मुख्यप्राणधर्मः । मा मोहमापद्यशा अहमेवैतत्पञ्चधात्मानं

प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि (प्र.२/३) इति श्रवणात् । यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः। (कौ.प्रा.३/३) इति जीवमुख्यप्राणवाच्यत्वे प्रज्ञाप्राणयोः सहवृत्तित्वादुपचारो युज्यते । उत्क्रान्तिश्च ।

न तु सर्वथा विलक्षणस्य ब्रह्मणः । तस्माज्जीवमुख्यप्राणलिङ्गयोर्विद्यमानत्वान्न ब्रह्मप्रकरणमिति चेत् । न । उपासात्रैविध्यात् । अयमर्थः । किमत्र चोद्यते । जीवमुख्यप्राणलिङ्गाद्ब्रह्मधर्माणां जीवपरत्वम् १ ।

त्रयाणामपि स्वतन्त्रत्वं वा २ । लिङ्गद्वयस्यापि ब्रह्मधर्मत्वमुच्यतामिति वा ३ । आद्यः पूर्वमेव परिहृतः। न हि ब्रह्मधर्मा अन्यपरत्वेन परिणेतुं शक्या इति ॥ द्वितीये दूषणमाह । उपासात्रैविध्यात् । तथा सत्युपासनं त्रिविधं स्यात् । तद्वाक्यभेदप्रसंगान्न युक्तम् । तृतीये तूपपत्तिरुच्यते । जीवधर्मा ब्रह्मणि न

विरुध्यन्ते । आश्रितत्वात् । जीवस्यापि ब्रह्माधारत्वात्तद्धर्मा अपि भगवदाश्रिता एव। इहेत्युभयग संबन्धो ब्रह्मवादे। मुख्यप्राणे तु तद्योगात् । तेन योगस्तद्योगस्तस्मात्। प्राणधर्मा भगवति न विरुध्यन्ते । प्राणस्य भगवत्संबन्धात्तद्धर्माणामपि भगवत्संबन्धात् ।

अथवा वक्तुत्वादयो न जीवधर्माः किन्तु ब्रह्मधर्मा एव । जीवआश्रितत्वाद् भासन्ते । परात्तु तच्छ्रुतेः (ब्र.सू.२/३/४१) इति न्यायात् । प्राणेपि तथा । स्वाप्ययसंपत्त्योर्जीवस्य ब्रह्माश्रितत्वम् । आध्यात्मिकाधिदैविकरुपत्वान्न संयोगः । प्राणस्य तु संयोग एव । तस्मात्सर्वे धर्मा ब्रह्मणि युज्यन्ते । सहोत्कमस्तु क्रियामानशक्तयोर्भगवदीययोर्देहे सहैव स्थानं सहोत्क्रमणमिति भगवदधीनत्वं सर्वस्यापि बोध्यते ।

ननु प्राणस्तथानुगमात् (ब्र.सू. १/१/२७) इति प्राणशब्देन ब्रह्मैव प्रतिपादितम् । तत्कथं धर्मयोरुत्क्रमणमिति चेत् । अत्र धर्मधर्मिणोरेकत्वपृथकत्वनिर्देशयोर्विद्यमानत्वात् । प्राणो वा अहमस्मिन्प्रज्ञात्मा (कौ.ब्रा.३/२) इति । अत्र कियाज्ञानशक्तिमान्निर्दिष्टः । तदन्वेकैकस्य धर्मप्रशंसा। यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः (कौ.ब्रा.३/४) इत्युपसंहारान्तम् । पुनस्तयोरेवोत्क्रमणप्रवेशाभ्यां - सह ह्येवास्मिन् शरीरे वसतः सहोत्क्रामतः (कौ. ब्रा. ३/४)

इत्युप्रकम्य सुषुप्तिमूर्च्छामरणेषु प्राणाधीनत्वं सर्वेषामिन्द्रियाणामुक्तवासन्यव्यावर्त्यर्थं प्रज्ञयैवयं

प्रतिपाद्योपसंहरति । पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुम् - अथ खलु यथा प्रज्ञायाम् (कौ.ब्रा.३/३) इत्यारभ्य न हि प्रज्ञापेतोर्थः कश्चन सिध्येत् (कौ.ब्रा.३/३) इत्यन्तेन ज्ञानशक्तयुत्कर्षं प्रतिपाद्य धर्ममात्रत्वनिराकरणाय ज्ञानशक्तिमन्तं भगवन्तं निदिर्शति - न हि प्रज्ञातव्यमित्यारभ्य मन्तारं विद्यादित्यन्तेन । तदनु ज्ञानकियाशक्त्योर्विषयभूतभूतमात्रारूपजगतो भगवदभेदं प्रतिपादयन् - स एष

प्रज्ञान्दोजरोमृत इत्युपसंहरति ब्रह्मधर्मैः । अतः क्रियाज्ञानविषयरूपो भगवानेवेति प्रतिपाद्य न तावन्मात्रं ततोप्यधिकं इत्येकोपासनैव विहिता । तस्माज्जडजीवरूपत्वात्सर्वात्मकं ब्रह्मैवेति महावाक्यार्थः सिद्धः ॥१/१/३०/१०॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥१/१॥

✣ ✣ ✣

।। श्रीहरिः ।।

।। श्रीकृष्णायनमः ।।

।। श्रीगोपीजनवल्लभायनमः ।।

।। श्रीवाक्पतिचरणकमलेभ्योनमः ।।

# अणु-भाष्य

## जिज्ञासाधिकरण

## अथातोब्रह्म जिज्ञासा ।१।१।१।

ब्रह्मज्ञान के लिये ब्रह्मविचार का आरम्भ किया जाता है। यहाँ यह विचार होता है कि वेदान्तों का विचार करना चाहिये या नहीं ? नहीं करना चाहिये तो क्यों नहीं ? इसलिये कि–

छः अंगों सहित वेद का अध्ययन करना चाहिये और उसका ज्ञान प्राप्त करना चाहिये। शब्द उसके अर्थ का बोध करा देंगे और उन शब्दों का बोध बिना किसी शंका के लोक की तरह व्याकरण से स्पष्ट हो जायेगा। अतः विचार नहीं करना यह पूर्व पक्ष है।

भगवान् व्यासजी ने चार अध्यायों में ब्रह्म का विशेष विचार किया है इसे ब्रह्ममीमांसा कहते हैं। इसके चारों ही अध्यायों में अनेक अधिकरण है उनमें यह प्रथमाध्याय के प्रथमपाद का प्रथम जिज्ञासाधिकरण है। सूत्र का लक्षण शास्त्रकारों ने ऐसा बताया है–जिनमें स्वल्प पद एवं स्वल्प, अक्षर हो, छोटे होते हुए भी जिनके द्वारा अर्थ सूचित होता हो तथा सब प्रकार से सारभूत हों उन्हें सूत्र कहते हैं। **'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च। सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण इति 'स्वल्पाक्षरमसन्दिग्धं सारावद्विश्वतो मुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः''** इन्हीं व्यास सूत्रों के ऊपर जगद्गुरू श्री मद्वल्लभाचार्य ने 'अणु भाष्य नामक भाष्य किया है'' भाष्य उसे कहते हैं–जिसमें सूत्र के वाक्यों के अनुसार अर्थ का वर्णन किया जाता है तथा उनके पदों का जिसमें विवेचन किया जाता है उसे भाष्य कहते हैं **''सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभि'' स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।''** भगवान् वेद व्यासजी ने इन सूत्रों में अधिकरण (मीमांसा) की योजना की है। अधिकरण का लक्षण शास्त्रों में इस प्रकार बताया है **''विषयो**

**विशयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्‌गतिश्चेति पंचागं शास्त्रेऽधिकरणं स्मृतम्''** जिसका विचार किया जाता है उस वाक्य को विषय कहते है और एक ही वाक्य में विरोधी दो कोटि का ज्ञान हो उसे संशय कहते हैं। प्रकृत अर्थ में विरोधी तर्क को उपस्थित करना पूर्वपक्ष कहा जाता है एवं सिद्धांत के अनुकूल तर्क का उपन्यास उत्तर कहा जाता है। महावाक्य के तात्पर्य के निश्चय को संगति का निर्णय कहा जाता है। मीमांसा के ये पांच अंग आवश्यक होते है।

यदि कहें कि अर्थज्ञान के लिये विचार का आरम्भ करना आवश्यक है क्योंकि अर्थज्ञान ब्रह्मरूप है इसलिये उसके ज्ञान में पुरुषार्थ होगा ऐसा मानना भी ठीक नहीं, विचार के बिना भी छः अंगों (शिक्षा–कल्प–व्याकरण निरुक्त–छन्द–ज्योतिष) सहित अध्ययन किये गये वेद से ही अर्थ की प्रतीति हो जायेगी। वेद का अर्थ जानना चाहिये ऐसा विधि वाक्य (आज्ञा) नहीं है और बिना विचार के शब्दों का अर्थ समझ में आ जायेगा ऐसा भी नहीं कह सकते। और जानना चाहिये ऐसा विधि वाक्य है '' गा गाकर पाठ करने वाला, शीघ्रता से पाठ करने वाला सिर हिलाते हुए पाठ करने वाला, जैसा लिखा है, (उसे बिना विचारे) वैसा ही वांचने वाला, अर्थ को नहीं जानने वाला, मन्दकण्ठ से उच्चारण करने वाला ये छः अधम पाठक कहे जाते हैं।' अर्थ को जाने बिना वेद के अध्ययन करने वाले को 'अधम' कहा गया है अतः यह बाधक वाक्य भी मिलता है। शब्द दिनेत्र आदि इन्द्रियों की तरह सन्दिग्ध अर्थ का निर्णायक नहीं है। शब्द का अर्थ तो व्याकरण आदि से ही निश्चित होगा जिस प्रकार लौकिक वाक्य में अर्थ का निश्चय व्याकरणादि से होता है उसी प्रकार वेद में भी हो जायेगा। व्याकरण के विरुद्ध जो निर्णय होगा वह तो अप्रमाणित ही होगा। इसलिये वेदार्थ के विचार के लिये विचार का आरम्भ नहीं करना चाहिये। इस प्रकार पूर्वपक्ष का समर्थन किया गया है।

उक्त पूर्वपक्ष का एकदेशी समाधान करते हैं–

वेद के अर्थमात्र के ज्ञान के लिये यदि विचार किया जाये तो ऐसा हो सकता है यहाँ तो केवल वेदार्थ का विचार नहीं है किन्तु ब्रह्मज्ञान के लिये वेदार्थ ज्ञान है। (वह ब्रह्म आत्मरूप है और वह अविद्या से आवृत्त ( घिरा हुआ) है। इसलिये देह में आत्मभाव की प्रतीति हो रही है उस देह से अतिरिक्त कोई ब्रह्म है। ऐसी प्रतीति ही नहीं हो रही है। इसलिये केवल वेद मात्र से असम्भावना और विपरीत भावना को दूर करने वाला ज्ञान उत्पन्न नहीं हो सकता। किन्तु इसके विपरीत देहात्मभाव की प्रतीति जब दृढ़ है तो श्रुति में जो देह में आत्म भाव को मिथ्या कहा है उसे औपचारिक मानेंगे अर्थात् जब देह में आत्मभाव दृढ़ हो

जाता है और वह मैं ब्राह्मण हूँ, मैं काणा हूँ, मैं सुखी हूँ, मैं दुःखी हूँ, मैं भूखा हूँ इत्यादि रूप में देह में ही आत्मा की दृढ़ प्रतीति है इसलिये श्रुति में आत्मा को नित्य–शुद्ध–बुद्ध–मुक्त स्वभाव कहा गया है उसे वह झूठा मानेगा। अथवा स्तुति परक मानेगा जैसे वेदों में यह कहा है कि यह सब कुछ ब्रह्म है, **'सर्वखल्विदं ब्रह्म'** और वेदों में प्रतीकोपसना भी कही है और उसका फल तत्त्व ज्ञान बताया है इसीलिये उपासना के लिये जैसे **'वाचं धेनुमुपासीत' ' धन्वन्निव प्रपासि'** इत्यादि श्रुतियों को केवल स्तुति करने वाला मानता है उसी प्रकार **'तत्त्वमसि श्वेतकेतो'** इनको भी स्तुति परक ही मान लेगा।

अब एकदेशी मत को दूषित करते है– ऐसा नहीं कहना चाहिये क्योंकि–वेद का अर्थ अलौकिक साधनों से ही जानना चाहिये। लौकिकयुक्तियों के द्वारा वह नहीं जाना जा सकता। उसे तो तप के द्वारा 'तपसा ब्रह्म विजिज्ञासस्व' ओर वैदिक युक्ति से जैसे **'न्यग्रोधफल माहर'** इत्यादि वैदिक युक्ति से एवं भगवान् की कृपा से जैसे भक्त्यातुतोष भगवान् गजयूथ पाय इस प्रकार की भगवान् की कृपा से जानना चाहिये।

वेद में जिसका प्रतिपादन नहीं है ऐसी बुद्धि से सब वेदवाक्यों की एक वाक्यता सिद्ध करने के लिये अध्यारोप, अपवाद की कल्पना करके विचार नहीं करना चाहिये। ब्रह्म तो जैसा है उसे वैसा ही मानना चाहिये। उससे जरा भी विपरीत कल्पना करने में दोष होगा।

जबकि आत्मा अन्य प्रकार का है उसका अन्य प्रकार से जो प्रतिपादन करता है। इस प्रकार आत्मा का अपहरण करने वाला वह चोर कौन सा पाप नहीं करता है। अर्थात् वह आत्मा का चुराने वाला महान् पापी है।

तर्क से बुद्धि को इधर–उधर न करना (भ्रम में न पटकना) ऐसा श्रुति में कहा है।

एक देशी व्यास सूत्र के रूप में वेदान्तों का विचार करना चाहिये ऐसा **'स्यादेतत्'** आदि पङ्क्तियों से प्रतिपादित किया– उनका कहना यह है कि यहाँ वेद के घटकपदों का अर्थ जान लेना ही वेदान्त विचार नहीं है किन्तु वह ब्रह्म आत्मरूप है अर्थात् जीवात्मरूप है वह जीवात्मा अपने को देह से अलग नहीं मानता है वह तो यह समझता है मैं देहरूप ही हूँ। यहाँ तक कि मैं ब्राह्मण हूँ, मैं काणा हूँ, मैं सुखी हूँ, मैं भूखा हूँ, इन देह के धर्मों का आरोप अपने में कर लेता है। इसलिये इस प्रकार के जीव की देह से मैं अलग हूँ ऐसा ज्ञान ही नहीं होता उनको केवल वेदघटक प्रत्येक पदों के अर्थज्ञान मात्र से असम्भावना और विपरीत

भावना की निवृत्ति नहीं होगी जैसे वेद में कहा है **'न तस्य कार्य करणं च विद्यते' एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं ज्योतिर्वायुरापश्च पृथ्वी विश्वस्य धारिणी' अणोरणीयान् महतो महीयान्' समोनागेन समो मशकेन'** इन वेद वाक्यों में ब्रह्म में विरुद्ध धर्मों का प्रतिपादन किया है इस असम्भावना की निवृत्ति केवल पदों के अर्थ ज्ञान मात्र से नहीं होती इसी प्रकार विपरीत भावना की निवृत्ति भी नहीं होगी। वेद की प्रामाणिकता को सिद्ध करने के लिये वेद में परस्पर विरुद्ध से प्रतीत होने वाले वाक्यों की संगति करनी पड़ेगी जैसे **'अथात आदेशोनेति नेति'** यह श्रुति अपवाद करती है अतः उसके लिये **सर्वंखल्विदं ब्रह्म तज्जलान्'** यह श्रुति ब्रह्म में कर्त्तृत्व का आरोप करती है इस तरह से अध्यारोप और अपवाद के द्वारा सब मिथ्या है ऐसा जान लिया जायेगा तब तत्त्वमसि आदि वाक्यों से तत्त्वज्ञान हो जायेगा।

परन्तु यह एकदेशी मत ठीक नहीं है इसे **'भैक्म्'** इत्यादि ग्रंथ से दूषित किया है– इसमें यह कहा है कि वेद का अर्थ अलौकिक साधनों से जाना जाता है लौकिक युक्तियों से उसका ज्ञान नहीं होता। तप, वेद में बतायी गई युक्ति और भगवान् की कृपा से तीन अलौकिक साधन है। तप से 'तपसा ब्रह्म विजिज्ञासस्व' तप के द्वारा ब्रह्म को जानो। युक्ति से **'न्यग्रोधफलमाहर'** छान्दोग्य उपनिषद् में आरुणि ऋषि अपने पुत्र श्वेतकेतु को ब्रह्मज्ञान का उपदेश दे रहे थे उस समय उसे युक्ति से समझाने लगे। पुत्र से कहा तुम एक वट वृक्ष देश का फल लाओ उसे तोड़ो उसमें क्या दिखाई देता है श्वेतकेतु ने कहा भगवन् इसमें तो छोटे–छोटे कण दिखाई देते हैं तब फिर कहा एक–एक कण को तोड़ डालो अब क्या दिखता है श्वेतकेतु ने कहा इसमें तो कुछ नहीं दिखता तब आरुणि ने कहा सौम्य इस अणिमा में ही वह महान् वट वृक्ष रहता है उसे जैसे तुम देख नहीं सकते उसी प्रकार उस अणिमा में यह सारा जगत् स्थित है। इसी प्रकार कृपा से भी भगवान् प्रसन्न हो जाते हैं जैसे भक्ति से गजेन्द्र पर भगवान् प्रसन्न हो गये **'भक्त्या तुतोष भगवान् गजयूथपाय'** अतः अपनी इच्छा के अनुसार अध्यारोप और अपवाद के द्वारा वेद का विचार नहीं करना। वेद में ब्रह्म को कर्त्ता कहा है तो यह कर्त्ता भी है ओर अकर्त्ता भी है। उसमें कभी अपनी युक्ति नहीं लगाना। जैसा वेद में कहा है वैसा ही मानना।

ऐसा कहना भी उचित नहीं होगा कि श्रुति में विरुद्ध वाक्य आये है इसलिये उसका निश्चय करने के लिये विचार आवश्यक है। श्रुति के तो दोनों ही वाक्य प्रमाण है उनमें से

किसी एक का निश्चय करना तो कठिन है। जैसे श्रुति में कहा है वह बैठा हुआ ही दूर चला जाता है सोता हुआ ही सब प्रकार से जाता है 'आसीनो दूरं व्रजति शयानो याति सर्वशः' यहाँ श्रुति में प्रतिपादित दोनों ही विरुद्ध है बैठे रहना ओर दूर जाना तथा सोते हुए भी सब प्रकार से जाना। यदि कहो कि दोनों ही उसमें रहते है तब तो फिर एक ही पशु में गोत्व (गायपन) और अश्वत्व (अश्वपन) भी माना जायेगा। परन्तु ऐसी बात नहीं है ब्रह्म तो अचिन्त्य जिसका विचार न कर सके एवं अनन्त जिसका कोई अन्त ही नहीं है ऐसी शक्ति वाला है और उसमें सर्व भवन (सब प्रकार से होने की) सामर्थ्य भी है इसलिये परस्पर विरुद्ध रूप से प्रतिपादन करने वाली श्रुतियों में कोई विरोध नहीं होगा। इसलिये तो उन उपाख्यानों में भृगु, वरुण संवाद में भृगु को जब बोध नहीं हुआ तो वरुण ने कहा तप के द्वारा ब्रह्म को जानों 'तपसा ब्रह्म विजिज्ञासस्व' इसी प्रकार छान्दोग्य उपनिषद् में इन्द्र प्रजापति केसंवाद में इन्द्र को जब औपाधिक बोध हुआ तो प्रजापति ने कहा बत्तीस वर्ष तक ब्रह्मचर्य से रहो **'वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्यम् '** इससे भी तप का ही उपदेश दिया यह नहीं कहा कि लौकिक युक्ति से उसे जान लो।

यदि कहो कि **'तप आलोचने'** इस प्रकार के धर्म से अभिनिष्पन्न होने से तप करने का अर्थ भी विचार करना ही होगा इस पर कहते हैं कि यहाँ तप का अर्थ विचार नहीं हैं। यदि विचार अर्थ लिया जायगा तो उसका अर्थ भी लौकिक युक्ति रूप अर्थ ही हो जायगा। इसलिये यहाँ यौगिक अर्थ न लेकर रूढ़ि से प्राप्त जो विचार से अतिरिक्त तप अर्थ है वह ही लेना। इसलिये छान्दोग्योपनिषद् में जो **'वस द्वात्रिंशत्वर्षाणि ब्रह्मचर्यम्'** का अर्थ विचार संभव नहीं है।

जहाँ–जहाँ उपाख्यानों में तप को ब्रह्मज्ञान का साधन बताया है वे उपाख्यान तो मिथ्या हैं। क्या कहीं ब्रह्मचर्य आदि तप से ब्रह्मज्ञान हो सकता है? इसलिये व्यासजी ने जो विचार आरम्भ किया है वह ठीक ही है। इस पर कहते हैं कि यदि उपाख्यानों को मिथ्या (झूठे) मानोगे तो अन्य बातें जो उपनिषदों में कही गई हैं वे भी मिथ्या ही मानी जायेगी क्योंकि यह तो कोई बता नहीं सकता कि अमुक कथन तो सत्य है और अमुक कथन मिथ्या है। जब वेद में अप्रामाणिकता आ जायेगी तो जिस प्रकार उपाख्यान अप्रमाणिक है उसी प्रकार उसमें आये हुए विधि वाक्य एवं ब्रह्म के स्वरूप के प्रतिपादन करने वाले भी वचन मिथ्या ही मानें जायेंगे। क्योंकि जो एक बार झूठ बोलता है तो उसकी सभी बातें झूठी ही मानी जायेंगी अतः

वेद के ऊपर किसी का विश्वास नहीं होगा जैसे लोक में एक बार भी जो झूठ बोलता है तो उसकी सत्य बात पर भी लोगों को विश्वास नहीं रहता। इसीलिये वेद में एक अक्षर भी मिथ्या (असत्य) नहीं है। इसलिये जो वैदिक है उनको तो वेद की बात पर संदेह ही नहीं है। तब उनको वेदों में विरुद्ध बाते हैं ऐसी कल्पना ही नहीं करनी चाहिये ।

विचार नहीं करना चाहिये इसमें और भी हेतु देते हैं यदि वेदार्थ ज्ञान में विचार का उपोग होता तो चौदह विद्याओं के अन्दर मुख्य जो वेद के छः अंग है उनमें मीमांसा का श्रवण (कथन) होता। अतः विद्याओं में जब इसकी गणना नहीं है तो विचार का आरम्भ नहीं करना चाहिये।

यदि कहें कि उपनिषद् से अतिरिक्त पुराणादि की तरह ब्रह्मज्ञानोपयोगी व्यासजी का यह स्वतंत्र विचार है तब तो फिर यह कहेंगे कि यह व्यासजी की मीमांसा उपनिषद् संबंधी ज्ञान का प्रतिपादन करने वाली नहीं है परन्तु उपनिषदों के अतिरिक्त अन्य ब्रह्मज्ञान के साधनों का निषेध किया है यह 'मैं तो उस उपनिषद् संबंधी पुरुष के विषय में पूछना चाहता हूँ, यहाँ 'तु' शब्द से अन्य ज्ञान के साधनों का निषेध किया है। अन्यथाज्ञान कभी भी उपनिषद् में बताये गये फल को नहीं दे सकता। अतः ब्रह्म विचार का आरम्भ नहीं करना चाहिये।

इस से धर्मविचार रूप पूर्वमीमांसा के ऊपर भी आक्षेप समझना जब ब्रह्ममीमांसा का निराकरण कर दिया तो उसका धर्म मीमांसा (विचार) के ऊपर आक्षेप करना कोई भाररूप नहीं होगा। इस प्रकार यह पूर्वपक्ष हुआ।

अब यहाँ सिद्धान्त का निरुपण करते हैं –

अवैदिक शास्त्रों का मनन करने से बुद्धि में दोष उत्पन्न हो जाता है, मीमांसा रूप शास्त्र उस दोष को दूर करता है। विरुद्ध शास्त्रों के अध्ययन से पदार्थ निर्णय में जब सन्देह हो जाता है तब वेद के छः अंगों द्वारा उसका निर्णय करना कठिन हो जाता है। उस समय इन व्यास सूत्रों के द्वारा साधन–फल–अधिकारी और संबंध रूप अनुबंध चतुष्टय का निर्णय करना चाहिये। यदि इन सूत्रों के द्वारा निर्णय नहीं किया जायेगा तो हीनाधिकारी एवं मध्यमाधिकारी अपने स्वार्थ से भ्रष्ट हो जायेगें।



पाठ की तरह अर्थ को भी गुरुमुख से ही सुनने पर, हीनाधिकारी को और

मध्यमाधिकारी को समान धर्म के देखने पर पदादि पाठ की तरह संदेह हो जायेगा। जैसे पदादि पाठ में **'देवायते यजमानाय शीकायते स्वाहा'** यह संहिता का परम्परा पाठ है और **'देवय ते शीकयते'** यह पद परम्परा पाठ है जैसे यहाँ ह्रस्वत्व और दीर्घत्व के संदेह है उसी तरह अर्थ में अक्ता: शर्करा उपदधाति यहां शक्कर में जिसे मिलाया जाता है। उनमें समान धर्म वाले तीन हैं घृत, तेल और वसा इनमें से किसको मिलाना चाहिये इस अर्थ में संदेह होता है । इसी प्रकार उपनिषदों में जहां विरुद्ध धर्म दिखाई देते हैं जैसे अपाणि पादो जवनो ग्रहीता उस ब्रह्म के हाथ पैर नहीं है और दौड़ता है तथा वस्तु को ग्रहण करता है। अब यहां संदेह होता है वह बिना हाथ पैर वाला है या दौड़ने पकड़ने वाला है । जैसे पदादि पाठ में, ह्रस्वत्व और् दीर्घत्व को संदेह में और शर्करा में किसको मिलाना चाहिये यह अर्थ में संदेह होता है। इसी प्रकार उपनिषदों में जहाँ विरुद्ध धर्म दिखाई देते हैं जैसे 'अपाणि पादो जवनो ग्रहीण' उस ब्रह्म के हाथ पैर नहीं है और दौड़ता है तथा वस्तु को ग्रहण करता है। अब यहाँ संदेह होता है वह बिना हाथ पैर वाला है या दौड़ने पकड़ने वाला है। जैसे पदादि पाठ में ह्रस्वत्व और दीर्घत्व के संदेह में और शर्करा में किसको मिलाना इनका निर्णय करने में शाखा व्याकरण आदि का एवं जैमिनी सूत्रों का उपयोग होता है उसी प्रकार ब्रह्म हाथ पैर बिना का है या दौड़ने पकड़ने वाला है इसका निर्णय सूत्रात्मक व्यास की मीमांसा से किया जाता है।

कहा भी है– वेद के अर्थ में कोई संदेह नहीं है इसलिये उत्तमाधिकारी को तो कोई संदेह नहीं होगा मीमांसा उसके लिये स्थूणाखनन्याय की तरह उसकी समझ को दृढ़ करने वाली होगी जिस समय खंभे को गाड़ते हैं उसको बार–बार इसलिये हिलाते हैं कि मजबूत हुआ या नहीं उसी प्रकार मीमांसा में उत्तमाधिकारी की समझ दृढ़ हो जायेगी किन्तु जो हीनाधिकारी है या मध्यमाधिकारी हैं उनके लिये तो मीमांसा से वेदान्त के अर्थ में जो संदेह है वह भी मिटेगा और वेदान्त के अर्थ का निश्चय भी होगा।

यद्यपि वेदान्तों का विचार कोई भी कर सकता था ऐसी स्थिति में स्वयं नव्यासावतार भगवान् ने ही वेदान्तों का विचार किया इससे भी वेदान्तों के विचार की कर्त्तव्यता बोधित होती है। जब व्यासजी ब्रह्म जिज्ञासा को करना चाहिये ऐसा कहते है तो व्यासजी के कहने से भी करनी चाहिये।



कोई ऐसा कहते हैं कि **''अथातो ब्रह्मजिज्ञासा''** यहाँ **'कर्त्तव्या'** इस पद का अध्याहार

करना चाहिये अर्थात् ब्रह्म मीमांसा करनी चाहिये। **'कर्त्तव्या'** इस पद का अध्याहार करने पर उसमें स्वतन्त्रता नहीं रहेगी उस विचार को उपनिषद् का विचार माना जायेगा यदि अध्याहार नहीं करेंगे तो **'अथ योगानुशासनम्'** की तरह यह विचार भी स्वतंत्र माना जायेगा तो इसका ज्ञान में उपयोग नहीं होगा। यहां तो **'त्वन्त्वौपानिषदं पुरुषं पृच्छामि'** जब कहा है तो केवल उपनिषद् के द्वारा ही जो जाना जाये उस ब्रह्म के विषय में प्रश्न है। अन्य शास्त्रों के द्वारा जो जाना जाये उस ब्रह्म के लिये प्रश्न नहीं है इसीलिये यदि मीमांसा स्वतंत्र होगी तो उससे उत्पन्न ज्ञान ब्रह्मज्ञान नहीं होगा।

अथवा **'कर्त्तव्या'** पद के अध्याहार करने की अपेक्षा सूत्र में ही आये हुए अथ शब्द को ही अधिकार के अर्थ में मान लेंगे तो फिर उसके अनन्तर ऐसा अर्थ नहीं होगा ऐसी बात नहीं है। वेदाध्यन के बाद मीमांसा करनी चाहिये यह अर्थ सिद्ध ही है उसके कहने की कोई आवश्यकता नहीं है क्योंकि जो वेदाध्ययन नहीं करेगा वह वेद का विचार क्या करेगा ? यदि कहो कि तो फिर मीमांसा में स्वतंत्रता दोष आ जायेगा ? हम समाधान करेंगे। वेदार्थ ब्रह्म का विचार वेद के अनुकूल है। अब यहाँ उचित क्या है 'कर्त्तव्या' का अध्याहार या अथ शब्द का व्याख्यान ? व्याख्यान करना ही उचित है क्योंकि **'व्याख्यानाद्हितो विशेष प्रतिपत्तिनहि नहि सन्देहादलक्षणम्' इस न्याय से जैसे अथातो दर्शपूर्णमासौ व्याख्यास्यामः'** यहाँ व्याख्या का निरूपण किया है वहाँ पशुसोम आदि के पूर्व निरूपण का निषेध हो जाता है इसमें या एकतर पक्ष पातिनी युक्ति यह है कि दर्शपूर्ण मास का अधिकार पहले किया है इसलिये उसकी व्याख्या पहले करेंगे। जैसे वहाँ किसी पद का अध्याहार नहीं किया उसी तरह यहाँ भी अध्याहार न करके अथशब्द का अधिकार अर्थ में व्याख्यान करके समाधान कर देंगे।

अब यहाँ व्याख्यान पक्ष में अनेक गुण हैं और अध्याहार पक्ष में अनेक दोष हैं उन्हें बताते हैं। व्याख्यान में इतने प्रयोजन सिद्ध होते हैं। अधिक की आकांक्षा नहीं होती अध्याहार भी नहीं करना पड़ता, पुरुषार्थ की सिद्धि भी होती है और विचार का उच्छेद भी नहीं होगा। वह कैसे ? अथ शब्द के चार अर्थ है मंगल, अधिकार, आनन्तर्य और अर्थान्तरोपक्रम। मंगल तो अर्थ शब्द के सुनने मात्र से ही हो जाता है। कहा भी है–**ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणःपुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ।।''** अर्थान्तर का अभाव होने से उसकी कल्पना ही नहीं करना। अब बचते है दो अर्थ आनन्तर्य और अधिकार। जब

आनन्तर्य अर्थ लेते हैं तो वेदाध्ययन के अनन्तर ऐसा कहें तो वह तो स्वतः ही सिद्ध है इसलिये किसके बाद ऐसी आकांक्षा होती है। ऐसा होने पर उससे अधिक की आकांक्षा होगी वह तो है नहीं तब विचार सिद्ध न होगा।

यदि कहें कि धर्म विचार के अनन्तर ब्रह्म विचार किया जाता है वह भी ठीक नहीं है वहाँ भी 'अथातो धर्मजिज्ञासा' उसमें भी **'अथ'** शब्द है इसलिये ब्रह्म विचार के अन्तर कर्म विचार करना चाहिये इस तरह विपरीत भी कहा जा सकता है यदि कहें कि वेद में पहले धर्म को पढ़ा गया है बाद में ब्रह्म का पाठ है इसलिये धर्म के विचार के अनन्तर ब्रह्म का विचार है इस प्रकार अथ का आनन्तर्य अर्थ हो जायेगा। पाठ में भी विपरीतता हो सकती है उसमें भी ऐसा कोई नियम नहीं है कि अमुक का पाठ ही पहले है। और यदि ऐसा कहो कि शिष्टाचार ऐसा है कि धर्मविचार के अनन्तर ही ब्रह्म विचार करना चाहिये यदि ऐसा होता तो धर्म विचार के पहले ब्रह्म विचार करने वाले के लिये कोई प्रत्यवाय होता, प्रत्यवाय का कोई वचन श्रुति में नहीं मिलता। यदि कहें कि विधि–मंत्र और अर्थवादों का कथन धर्म में है और उनका उपयोग इस ब्रह्म मीमांसा (उत्तर मीमांसा) में होता है इसलिये धर्म विचार के अनन्तर ब्रह्म विचार किया जाता है इस प्रकार अथ शब्द का अर्थ सम्भव हो जायेगा। परन्तु ऐसा कथन भी उचित नहीं क्योंकि जो बात अन्याथानुपपत्ति के द्वारा ही सिद्ध हो जाती है। उसको शब्द वाच्य नहीं कहा जा सकता। मान भी लें कि धर्म विचार के अनन्तर ब्रह्म विचार करना चाहिये उसमें भी यह आकांक्षा होगी कि किसके बाद में यदि कहेंगे कि पूर्व में सिद्ध वैराग्य, शम, दम एवं मोक्ष की जिसको इच्छा होगी उसके अनन्तर क्योंकि वे ही वेदान्त विचार के अधिकारी हो सकते हैं। परन्तु ऐसा कहना भी ठीक नहीं जब तक पुरुष को नित्य और अनित्य वस्तु का विवेक ही नहीं होगा तो उसको वैराग्य कैसे होगा इसलिये वैराग्य आदि पूर्व सिद्ध नहीं है। यदि कहें कि वैराग्यादि जब हों उसी के बाद ब्रह्म विचार किया जाये यह असंभव है। क्योंकि वेदान्तार्थ निर्णय के पूर्व वैराग्यादि नहीं हो सकते, असंभव है। जब ब्रह्म को ही परम पुरुषार्थ (परम फलरूप) जान लेना और उसकी प्राप्ति में ब्रह्म ज्ञान ही साधन है और योग आदि भी चित्तशुद्धि के द्वारा ब्रह्मज्ञान में साधन है ऐसा जब समझ लेगा तब निष्काम भाव से ब्रह्मज्ञान के लिये कर्म करने पर जब चित्तशुद्धि हो जायेगी तब वैराग्य आदि होंगे। यह सब वेदान्तविचार के बिना नहीं हो सकता। इसलिये यहाँ अन्योन्याश्रय दोष आ जाता है। अर्थात् ब्रह्म ज्ञान के लिये कर्म करना चाहिये। कर्म करने से चित्त शुद्धि होती है तब वैराग्यादि प्राप्त होते हैं और वैराग्य आदि की प्राप्ति के अनन्तर ब्रह्म विचार उत्पन्न होता है इस प्रकार की विचार सरणी स्वीकार करने पर अन्योन्याश्रय दोष आता है।

